# अतिवडीजगन्नाथदासः



लेखनं संकलनं च

**श्रीनारायणरथः**

( वि. ए. अनर्स ), गुडिआसाहि, पुरी

Rs 8—

कार्यं सम्पादयति। यामि। प्रत्यागते मयि पूजा भवितव्या मध्याह्ने अतीतेऽपि।

(दाशस्य गमनं धात्रीमानेतुम्। इत्यन्तरे पुत्रजन्म। सर्वे उल्लसिताः)

लोकाः— पुराणपण्डितस्य गृहे प्रथमः पुत्रजन्मोत्सवः। भगवती राधिका अस्मिन् क्षणे एव द्वापरे वरपाणाग्रामे सम्भूता आसीत् अद्य पण्डितवासरः। ख्रीष्टीय १४६० सम्वत्सरस्य भाद्रशुक्लाष्टम्यां वृषभानुसुता जन्मान्तरं गृह्णातीव पुरुषवपुषा। (दाशस्य प्रवेशः)

दाशः— (श्रुत्वा हृष्टः) जातकर्म सम्पादनीयम्। गणकमावाहयामि लग्ननिरूपणाय। भगवतः श्रीजगन्नाथदेवस्य प्रसादोऽयम्। तस्मात् जगन्नाथ इत्यभिधानमस्तु शिशोः।

लोकाः— एवमस्तु, एवमस्तु। (अकस्मात् गणकस्य प्रवेशः)

गणकः— (दाशमालोक्य) रविः सिंहे अनुराधानक्षत्रे वृश्चिकराशौ च चन्द्रो वर्त्तते इदानीम्। मध्याह्ने तुलालग्नस्य अन्त्यपादस्य भोगः। द्वितीये चन्द्रमसः अवस्थानात् चन्द्रवत् रमणीयं मुखं भवत्यस्य शिशोः। ग्रहस्थितिः महापुरुषत्वं सूचयति। परन्तु ......

दाशः—परन्तु किम्? अकपटं प्रकाशय। ईस्वरेच्छा अवश्यं भविष्यति।

गणकः— शिशोः नाम जगन्नाथ इति रक्षितं त्वया। यथार्थतः स जगन्नाथदेवस्य एव। न ते गृहाय चिरेण। जातमात्रस्य शिशोः वा भवितव्येन किम्? परन्तु बालरिष्टो नास्ति। किञ्चित् श्लेष्मातिरेकः भवेत् कियत् वर्षाणि यावत्।

दाश —अस्तु तावत् यद् भावि । (रंभाफलवितरणं ग्रामबालकबालिकाभ्यः सर्वेभ्यः समवेतनरनारीभ्यश्च ।

## ( द्वितीयदृश्यम् )

[ ग्रामपाठशालायां पठति जगन्नाथः । आचार्य आगच्छति ।]

आगन्तुकः— आचार्य ! कोऽयं बालकः यः सावधानं त्वयि अनुपस्थितेऽपि इतरेषु क्रीडत्स्वपि पठने मनोनिवेशं करोति ? स्वर्णकान्तं शरीरम् । लोकोत्तरं लावण्यम् । असामान्या आकर्षणी शक्तिः । कीदृक् विद्यायां प्रवेशोऽस्य उपनीतः किमु ?

शिक्षकः— एष जगन्नाथः नाम्ना । भगवानदासस्य पुत्रः । श्रुतिधरः प्रतिभाशाली च लक्ष्यते । पञ्चमवर्षे उपनीतः । इदानीं साहित्ये गणिते च व्युत्पन्नः । स्वपितुः सकाशात् कोषग्रन्थः व्याकरणं च पठति । ग्रामान्तरं गत्वा ब्राह्मणपण्डितसकाशात् वेदवेदाङ्गषड्दर्शनमधीतेऽपि । इतः परं महाभारतरामायणशिक्षान्ते भागवतं पठिष्यतीति तेन पण्डितेनोक्तम् । धीशक्तिरनन्यसाधारणा । सकृत् श्रवणमात्रेण मनसि करोति ।

आगन्तुकः—नूनं विस्मयकरी उक्तिस्ते । यथार्थतः जन्मान्तरविद्या जनं प्राप्नोति । नोचेत् एवं अल्पे वयसि अपि कथं श्रीमद्भागवते प्रवेशः ?

शिक्षकः— बालकाः ! अद्य कृते समाप्तमिव पठनम् । स्व स्व गृहं गच्छ । जगन्नाथस्तु मया सह यास्यति ।

( बालकानां प्रस्थानं, दाशस्य आगमनम् ।)

दाशः— शिक्षकमहाशय ! अद्यास्मद्गृहे भवतः भोजनम् । जगन्नाथस्य कथमाग्रहो जायते गणिते ? अमरकोषः व्याकरणं च पाठितं मया वेदशास्त्राणि च किञ्चित् पठति । द्वादशवर्षाणि व्यतीतान्यस्य । विवाहं कारयित्वा शान्ति लब्धुमिच्छामि ।

शिक्षकः— नहि तथा करणीयं रभसेन । धर्मशास्त्राणि दर्शनशास्त्राणि च आयत्तीकरोतु सः । विंशतिवर्षाणि यावत् यातु एवं क्रमेण ।

दाशः— तर्हि नहि मे भाग्ये तत्सौभाग्यदर्शनम् । यतः विद्यावृद्ध्या सह वैराग्यस्य वृद्धिमपि पश्यामि । क्रीडाकौतुकेषु बन्धुसु न तथा आग्रहो दृश्यते तस्य । सदाचारे रतोऽपि निर्मलवेशेन ग्रामाद्बहिः शिलायां उपविष्टः सरसीतीरे किञ्चित् निविष्टेन मनसा चिन्तयति । तस्मादेव मे विवाहाय व्यग्रता । अस्तु तावत् ईश्वरेच्छया यद् भावि । सम्प्रति गृहं यामः । (प्रस्थानम्)

## तृतीयदृश्यम्

[ श्रीमन्दिर-वटवृक्षतले जना अपेक्षमाणाः जल्पन्ति ]

१म— कथमद्य पुराणपण्डा नागतः एतावतापि । अनभिमतं किञ्चित् घटितं किमु ?

२यः— मैवं शङ्क्या । दूरादागच्छति । किशोरः स एव अष्टादशवर्षीयः किमपि गृहकार्यं स्यात् । पितरि दिवं गते स एक एव सर्वं निर्वाहयति गृहकार्यं अत्र पुराणपाठेन सह ।

३यः— पितुरप्यधिकं ललितं तस्य व्याख्यानम्। अष्टादशवर्षेऽपि भागवतव्याख्यानम्। मुक्तिमण्डपस्थैः पण्डितैः अपि बहुमानितः सः। स्वयं राजापि पाण्डित्येन प्रसन्नस्तस्मिन् विस्मयात्। (इत्यन्तरे (जगन्नाथदासस्य प्रवेशः)।

लोकाः— पुराणवक्ता समागतः। मा चिन्तया।

जगन्नाथः— (हस्तादिकं प्रक्षाल्याचम्य आसने उपविश्य पुराणं पठति) सज्जनाः! ह्यः वयं वत्साहरणं पठितवन्तः। पितामहः कृष्णस्य भगवत्त्वस्य परीक्षणाय एवं कृतवान्। मुहुः वृन्दावने गोकुलं वीक्ष्य स्वपुरं गत्वा तत्रापि तथालोक्य हतबुद्धिः शरणं याचमानः वृन्दावनविपिने प्रच्छन्नं विहरति प्रजापतिः कृष्णदर्शनाय। निर्जने तं दृष्ट्वा भयविस्मयभक्त्या स्तोतुमारभते स इत्यन्तं पाठं कृतवान्। अद्य केवलं स्तुतिपाठः ब्रह्मणः क्षमापनं च पाठ्यम्।

लोकाः— एवम् एवम्। तदेवाकर्णयितुं वयं चिराय अपेक्षमाणाः।

जगन्नाथः— "नौमीड्य तेऽभ्रवपुषे तडिदम्बराय
गुञ्जावतंसपरिपिच्छलसन्मुखाय।
वन्यस्रजे कवलवेत्रविषाणवेणु
लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय॥"

वनमालिनः कवलवेत्रवेणुपाणिनः गुञ्जाभूषणं शिखिपुच्छं पीताम्बरं च पितामहस्य मनो हरन्ति स्म। तस्मात् विश्वम्भरं निराकारं तल्लक्षणैः स्तुवन् कथयति प्रभो! त्वयि एव नाथवान् अहं। त्वयैव ब्रह्मणः मदर्पितं मे।

"अतः क्षमस्वाच्युत मे रजोभुवः
अजानत स्त्वत्पृथगीशमानिनः ।
अजावलेपान्धतमान्धचक्षुषः
एषोऽनुकम्प्यो मयि नाथवानिति ॥"

उत्क्षेपणं गर्भगतस्य पादयोः
किं कल्पते मातुरधक्षोजागसे ।

कृष्ण ! त्वं पूर्णब्रह्म सनातन एव मां क्षमस्व यातु मनुयानीहि च
ॐ तत्सत्, वटविहारिणे वटमूलवासिने श्रीकृष्णायार्पितमस्तु ।
प्रसादवितरणम् ।

## ( चतुर्थदृश्यम् )

[ श्रीमन्दिरे महास्नानम् । महाप्रसादाभावात् जना न तथा समवेता ]

( काचित् वृद्धा तिष्ठति दाशस्य पुरतः पुराणपाठम् अपेक्षमाणा )

वृद्धा— भगवन् ! भवन्तः संस्कृतभाषानिष्णाताः । तस्मात् कृष्णलीलादि भागवतविषयं बोद्धुं बोधयितुं वा शक्नुवन्ति । अन्ये पुरुषा अल्पापं मातृभाषाज्ञानात् भवतां भागवतव्याख्यानं मुग्धाः शृण्वन्ति । वयं तु स्त्रियः प्रायश इदानीं मूर्खाः विशेषतः गृहकर्मलग्नाः निर्यातिताः । पञ्चाशदूर्ध्वेऽपि अत्र कथमपि गोपनेन भवद्व्याख्यानं श्रोतुमागच्छामि । परन्तु इतराः गृहयोषित्कन्यकाः ब्राह्मणेतराः पुरुषाः वा कथं भगवंतलीलाकथाश्रवणात् आनन्दं

प्राप्नुवन्ति इत्येव मे परमभागवतस्य परोपकारपरायणस्य प्रकाण्डसंस्कृतपण्डितस्य भवतः पुरस्तात् जिज्ञासा ।

दाशः— मुक्तिमण्डपस्थाः पण्डिताः स्व स्व ग्रामे गृहे वा तत्तदाख्यानं पठितुं पाठयितुं वा शक्नुवन्ति । तस्मात् स्वगृहे स्वग्रामेऽपि यूयं प्रौढाः कन्यकाश्च भागवतश्रवणं कर्त्तुमर्हन्ति । अत्र का असम्भावना अनौचित्यं वा ? स्वग्रामे स्वगृहे वा तुलसीमण्डप-समीपे भागवतपाठं कारय ब्राह्मणैः ।

वृद्धाः— भवतः कपिलेश्वरपुरशासने कति ब्राह्मणपण्डिताः सन्ति ये तु भागवतं व्याख्यातुं शक्नुवन्ति । अस्तु । तर्हि तस्माद् ग्रामाद् एव भागवतमण्डपे ग्राम्यपुरुषाणां पुराणश्रवणं प्रचलतु । तदेव आदर्शो भूत्वा ग्रामाद् ग्रामान्तरं प्रचरिष्यति । परन्तु दिल्ली-नगर्यां यवनशासने सति कतिचन ब्राह्मणपण्डिताः वा राजानुग्रहं प्राप्नुवन्ति ।कुत्र तावत् विद्यालयाः विद्याप्रसाराय राजप्रचेष्टा वा । कथमपि राजस्वग्रहणेन सह सुन्दरीणां बलादपहरणेन तेषां राजकार्यं सम्पन्नमिव । प्रतापरुद्रेण कलिङ्गसम्राजा धार्मिकेनापि कतिचन विद्यालयानां शिक्षासंस्थानानां च प्रवर्त्तनं कृतं येन लोकसाधारणाः साक्षराः शिक्षिताश्च भवेयुः । केवलं श्रीजगन्नाथसेवा, राज्याक्रमणं धनसंग्रहः, स्वकीयपुण्यवृद्धये वासना इत्येव राजकार्यस्य परिसर इदानीम् । दरिद्रब्राह्मणाः कृपालवश्चेत् सेवया जिज्ञासुब्राह्मण-बालकान् किञ्चित् पाठयन्ति संस्कृतम् । (विरमति सहसा)

जगन्नाथः—(विस्मितः) कथं मध्ये विरतिः ?

वृद्धा:— उत्कलदेशे उत्कलभाषाया आदरो नास्ति संस्कृतपण्डितानाम्। का कथा मौलवीनामितराणां वा। संस्कृतभाषां विना मातृभाषया पुराणं रचितं पठितं चेत् किं जगन्नाथस्य अप्रीतेः सम्भावनास्ति? त्वं च सचल जगन्नाथ इव। मातृभाषा तुभ्यं न रोचते किम्? मातृभाषया स्तुतिं करणेन भगवन्तः द्रुतं प्रसीदेयु इति मे मतिः पूर्णतया भावप्रकाशात्। मातृभाषया भावप्रकाशनं यथा सुकरं न तथा भाषान्तरेण संस्कृतभाषयापि। अतः भगवन्! भवान् विज्ञपुरुषगणान् केवलं कृष्णभक्तिरसं पाययति न तु अविदुषःस्त्रीबालकान् ब्राह्मणेतरान् वा। धृष्टता मे मूढायाः मार्जनीया विशेषतः भवद्विधानां पण्डितानां पुरतः प्रस्तावदानात् दिग्दर्शनात् च। परन्तु स्वोदारबुद्ध्या अस्मिन् विषये स्तोकं चिन्ता विधेया। यामि, गृहे पीडिताः सन्ति नप्तारः। स तु पुराणश्रवणान्ते इतः गत्वा मामवीक्ष्य विरक्तो भविष्यति। तुभ्यं नमोऽस्तु भगवन्। भूय आगमिष्यामि विज्ञातुं भवन्निश्चयं प्रतीकारं च।

—*—

## ( प्रश्नसट्त्रयम् )

[शरत्धातटे जगन्नाथबलभद्रादीनां रथे विश्रामः।]

आखण्डलमेकापः— नद्याम् अकस्मात् जलप्राबल्यम्। अभुक्ता वयमपि दिनद्वयात् महाप्रसादमप्राश्य। किमीश्वराणां विचारः। नाद्य पुराणपाठो भविष्यति। मार्गेऽवरुद्धाः श्रीविग्रहाः। मन्दिरे न कोऽपि तिष्ठेत्। कथं पाठः भवेद् वा।

काह्नु खुण्टिआ— पुराणश्रवणाय श्रोतॄणामनागमेऽपि दाशः वटविहारि जगन्नाथस्य समीपे क्षणमपि तं श्रावयिष्यति भागवतम् ।

आखण्डलः— तर्हि गन्तव्यं तत्र । रात्रिः गभीरतां प्रयाति (गमनं) ।

जगन्नाथदाशः— (वटविहारिणः पुरतः भागवतं पूजयित्वा तूष्णीं ध्यान-मग्नः । भक्तद्वयस्य प्रवेशः प्रणामश्च) आखण्डल ! कथमकाले युवामागतावत्र श्रीविग्रहं तत्र मार्गे विहाय ।

आखण्डलः— कथं चिन्तामग्नः प्रतिभाति भवान् चिरप्रसन्नोऽपि ।

काह्नुः— एवं किञ्चिदहमपि तर्कयामि । ब्रूहि का समस्या ते ?

जगन्नाथः—तर्हि कथयामि । वयस्याः ! कियत्कालं वा अहमत्र स्थित्वा भवद्भ्यः पुराणं श्रावयिष्यामि । उत्कलीयाः प्रायशः संस्कृतान-भिज्ञाः । ये केचन ब्राह्मणाः संस्कृतं पठन्ति ते तु क्षुद्रक्षुद्रनरपतीनां पुरतः श्लोकरचनया तेषां प्राशस्त्यं ख्यापयन्तः अथवा मिथो विवादेन पाण्डित्यं दर्शयन्तः स्वोदरपूरणेन कालं नयन्ति । न कोऽपि चिन्तयति उत्कलीयानां कल्याणम् । उत्कलदेशेऽपि उत्कलभाषायाः अप्रचारः अनादरः । राजा तु संस्कृतज्ञब्राह्मणानां वशीभूतः । मातृभाषां हेयं मन्यन्ते तथाकथितसंस्कृतज्ञब्राह्मण-पण्डिताः ।

काह्नु— परन्तु कथमेतत् ?

जगन्नाथः— मूले तु राज्ञामनादरः । अतः एवम् उपायः अवलम्बनीयः येन सर्वत्र कलिङ्गसाम्राज्ये सर्वे जनाः शूद्रब्राह्मणनिर्विशेषेण

प्रधानभक्तिग्रन्थभागवतस्य रसास्वादं स्वेन प्रयत्नेन कर्त्तुं शक्नुवन्ति।

आखण्डलः— मातृभाषया अनुवादः कर्त्तव्यः तर्हि।

कान्हुः— भागवतं तु कठिनम्। आक्षरिकानुवादः बोधगम्यः न भवेद् वा। (पूर्ववृद्धायाः आगमनं प्रणामश्च)

वृद्धानन्दिनी— श्रुतं जल्पितं वः। अतः स्वरीत्या मातृभाषया यथासम्भवं भावाः प्रकाशितव्याः।

जगन्नाथः— साधु साधु अम्ब नन्दिनि। तवाज्ञा पालनीया मया। त्वयैव सम्यग् दिग्दर्शनं कृतम्। विरचयिष्यामि भागवतम् उत्कलभाषया यथासम्भवमूलमनुसृत्य।

सर्वे— एवमस्तु। एवमस्तु। हरिशयनात् प्रागेव आरम्भः स्यात्।

जगन्नाथः— (क्षणं मौनात्) अस्तु तावदेव (निष्क्रान्ताः)।

—*—

## ( षष्ठदृश्यम् )

[ वटमूले पुराणं पठति जगन्नाथदासः भक्तानां पुरतः ]

जगन्नाथः— (पूजान्ते) नारायणं नमस्कृत्यं नरं चैव नरोत्तमं।
देवीं सरस्वतीं व्यासं ततोजय मुदीरयेत्॥

अथ मुचुकुन्दस्तुतिः। मुचुकुन्दः महाबली चक्रवर्त्ती सम्राट् आसीत्। घटनाक्रमेण दीर्घायुषं प्राप्य वररूपेण पुरुहूतं

 

चिरेण सुषुप्तिमयाचत तत्परिचितानां सर्वेषां कालमहात्। सुप्तोत्थितस्य तस्य दृक्पातेन कालयवने निहते पीताम्बरं भगवन्तं दरीगृहम् आलोकयन्तं वीक्ष्य परिचयान्ते स्तौति। मुचुकुन्दं निमित्तीकृत्य सर्वेषां श्रीगर्वितानां बलदर्पितानां व्यामोहं प्रकाशयति इव भगवान् बादरायणः स्तौति मनुष्याणां दुर्दशामालोक्य सभ्याः ! सावधानं शृणुत।

जनाः— (सावधानाः भवन्ति तन्मुखमालोक्य) हरिः हरिः।

जगन्नाथः— प्रथमश्लोकः ह्यः व्याख्यातः यत्र लोकानां संकीर्णगृहसर्वस्वता क्षुद्रदर्शिता च प्रदर्शिता। तदेव विशदयति द्वितीयादिषु।

लब्ध्वाजनं दुर्लभमत्रमानुषं कथञ्चदन्यङ्गमयत्नतोऽनघ पादारविन्दं न भजत्य सन् मतिः गृहान्धकूपे पतितो यथा पशुः।

सज्जनाः ! अत्र पुण्यमयभारतवर्षे, तत्रापि उत्कलप्रदेशे पुरुषोत्तमक्षेत्रे मानुषं जन्म तत्र सुस्थशरीरं प्राप्यापि वयं गृहमेव स्रीपरिवारादिकं वा सर्वस्वं मन्यमानाः पशव इव अन्धकूपे पतिताः। गृहान्धकूपात् परं किं चास्ते तदुद्धातुम् अकामा एव।

लोकाः— (मिथो मुखं पश्यन्ति) वाढम्। वाढम्।

जगन्नाथः— अतएव असन्मतयः सन्तः असद्वस्तुषु मतिं निवेश्य सन्मार्गादपेता इव वयम्।

लोकाः— (उपांशु) एव एव।

जगन्नाथः— अनघ महाप्रभो भवान् तु अशरीरी। तथापि वासुदेवकृष्णनाम्ना ख्यात असि। पुरा दाशरथिरपि त्वमेवासीः। एवं

एवं नृतिर्य्यगादिविशेषरूपधारिणं त्वां कथं वयं सेवामहे ? अतः अशेषजनतारूपेण अत्र ये जना उपस्थिताः अन्यत्र वा वर्त्तन्ते तेषामादरसत्कारोपकारं विना महापुरुषस्य तस्य सहस्रशीर्षस्य कथं वा आराधना सम्भवति येन मोक्षः स्यात् अस्माकं संसार-पाशात् जन्ममरणरूपात् । (जनतामध्यात् उत्थाय)

चैतन्यः— साधूक्तं साधूक्तं जगन्नाथ । त्वय्येव जगन्नाथः मूर्त्तिमान् इति मन्येमहे लोकानां मोहनिद्राभङ्गाय । तदर्थमेव व्यासेन किञ्चित् परतः तत्रैव स्तुतौ ख्यापितं—

प्रमत्तमुच्चैरितिकृत्यचिन्तया
प्रवृद्धलोभो विषयेषु लालसः ।
त्वमप्रमत्तः सहसाभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमन्थकः ॥

लोकाः— (विस्मयात् परावृत्य) कोऽयं ? कोऽयं ? (चैतन्यं वीक्ष्य) अहो भाग्यमस्माकम् । महाजनानां संगतिः ।

चैतन्यः— साधवः ! संसारनिर्वाहार्थं जीविकार्जनं इति कृत्यचिन्तया प्रवृद्धलोभेषु विषयिषु अस्मासु अप्रमत्तः जगन्नाथदासः अस्मन् मोहनिद्राभङ्गाय अत्र उपस्थित एव कालभीतिं प्रदर्शयन् यथा क्षुत्क्षामः पन्नगः मूषिकान् नाशयति । अयं विप्रः जगन्नाथः यथार्थतः जनानां मोहनिद्रानाशाय एव श्रीमद्भागवतस्य उत्कल-भाषान्तरीकरणाय सञ्जातः । अद्य प्रभृति एषः अतिवडी जगन्नाथ इत्याख्यया ख्यातो भवतु ।

दाशः— भगवतः नवद्वीपचन्द्रस्य करुणया अनुगृहीतोऽस्मि। भवानेव मोहप्रणाशाय जगत्याम् अवतीर्ण इत्यहं जाने। वृथा मां लज्जितं करोषि उपाधिदानेन। (पदे प्रणन्तुकामं दाशं निमाइपण्डितः गाढमालिङ्गति स्वोत्तरीयं तन्मस्तके वेष्टयति च)।

चैतन्यः— नित्यानन्द। अद्वैत। अयम् ऊनविंशतिवर्षीयस्तरुणो विप्रः श्रीजगन्नाथस्य बन्धुरेव। तस्मात् जगन्नाथादिव अस्मादपि मे महती भीतिः प्रीतिश्च। सोऽयं विशुद्धप्रेम्णः आकर इव। तस्मिन् निष्कामतया मे प्रणयः स्यात्। प्रथमदर्शनादेव अनेन विह्वलितोऽहम्। अद्य प्रभृति प्रत्यहं अस्य पुराणव्याख्यानं श्रोतुमिच्छामि श्रीमन्दिरे जगन्नाथदर्शनानन्तरम्।

जनाः— (विस्मयात्) अतिवडी जगन्नाथदाशस्य जयोऽस्तु जयोऽस्तु।

## द्वितीयाङ्कः प्रथमदृश्यम्

[ काशीमिश्रस्य आवासः। वङ्गीयसाधकभक्ताः जल्पन्ति असूयया ]

वक्रेश्वरपण्डितः— निमाइपण्डितेन अपमानिता वयम्। अदीक्षितस्य अतएव अशुद्धगात्रस्य जगन्नाथदाशस्य आलिङ्गनं सर्वथा अयुक्तमासीत् एव।

गोविन्दः— परन्तु ब्राह्मणत्वात् पुण्यशरीरं तस्य। भगवान् वासुदेवस्तु विप्रशरीरे वसति। गोब्राह्मणहिताय तस्य जन्म एव। कथं निन्दसि जगन्नाथं गुरुपादं चैतन्यं वा।

वक्रेश्वरः— तर्हि अवतारोऽपि हरेः निमाइपण्डितः कथं दीक्षितोऽभूत् । कथं वा संसारत्यागः दण्डधारणं च । अत्र नीलाचलक्षेत्रागमनात् प्रागेव दण्डं भग्नं कृत्वा दण्डभङ्गनदी (भार्गवी) गर्भे त्यक्तवानेव।

गोविन्दः— तत्तु भग्नदण्डावलम्बनात् पूर्णगर्भायाः नद्याः उत्तारण-व्याकुलतया एव । तरणेरभावः आसीत् रात्रकालत्वात् । क्षेत्र-प्रवेशाय मनस्तु व्याकुलमभवत्तस्य । जगन्नाथदर्शनाय व्यग्रता एव हेतुरासीदत्र। अचिन्त्यचरितानां महापुरुषाणां कार्याणां समा-लोचना निन्दा वा अकार्या एव । जगन्नाथदाशः संस्कृतभाषायां वेदवेदाङ्गादिषु च निष्णातः अत्यल्पवयस्यपि । तस्मिन् श्रीजग-न्नाथस्य करुणा दृश्यते एव। अस्मद्गुरोरपि महती खलु प्रीति-स्तस्मिन्।

काशीमिश्रः— जगन्नाथदाशस्य अन्तर्यामित्वमपि आविष्कृतं चैतन्येन ।

वक्रेश्वरः— कथमेतत् ?

काशीमिश्रः— एवमुक्तं गुरुपादेन चैतन्यचन्द्रेण तदानीं विस्मयेन स्वस्यान्तर्यामित्वेऽपि- गरुडस्तम्भसन्निधाने दण्डायमानस्य मनसा पुष्पमालायां ग्रन्थि दत्वा देवाय अर्पितुकामस्य तस्य मुहुरसाफल्यं विज्ञाय पार्श्वस्थितेन दाशेन मालायां ग्रन्थिमदत्वा बाहौ प्रदातुं उपदेशः कृतः इति । तथाकृते सति मालामर्पितवान् स श्रीविग्रहे तथैव मनसा । परन्तु मनोगतं कथं अनेन ज्ञातं इत्यालोच्य परं विस्मयमवाप्य चैतन्यः तं बहुमानितवान् एव। अस्मद्विधेषु दीक्षितेषु एवमलौकिकी शक्तिः वर्त्तते किमु ?

वक्रेश्वरः— तथापि दीक्षाग्रहणस्य आवश्यकता। स्वयं शुकदेवः जन्मनः ब्रह्मज्ञोऽपि जनकात् शिष्यत्वं स्वीकृतवान्। (इत्यन्तरे चैतन्यस्य प्रवेशः)।

चैतन्यः— अलं वितर्केण। प्रत्युत जगन्नाथस्य दीक्षाया आवश्यकता नास्ति श्रीजगन्नाथेन अङ्गीकृतत्वात्। तथापि लोकाचार दृष्ट्या दीक्षा विधातव्या तस्य। मत्तवलरामेण स दीक्षितोऽस्तु। बलराम त्वमेव मन्त्रं दातुमर्हसि कनीयसे जगन्नाथदाशाय।

वलरामः— यथाज्ञापयते देव! परन्तु अहं "हरे राम हरे राम राम राम हरे हरे" इति मन्त्रमेव दास्यामि नतु "हरेकृष्ण हरेकृष्ण" इत्यादिना। (जगन्नाथदाशस्य प्रवेशः)

जगन्नाथः— गुरुपादेन बलरामेण प्रेममत्तेन यदुक्तं तद् युक्तियुक्तमेव। हरेरामादिकं मन्त्रमेवाहं ग्रहीतुकामः।

चैतन्यः— कथं ते समर्थनम्। का युक्तिरत्र शास्त्रदृष्ट्या।

जगन्नाथः— मन्त्रदातुरिच्छा मान्या एव मे। सङ्गतिरसङ्गतिर्वा स एव जिज्ञास्यः।

चैतन्यः— (विहस्य) साधूक्तं, बुद्धिमानसि वत्स जगन्नाथः।

(यवनिकापातः)

# ( द्वितीयदृश्यम् )

[ कार्त्तिके प्रवलवर्षा वात्या च । वैष्णवानामागमनम् ]

आखण्डलः— वैष्णवाः ! व्यर्थमागमनं युस्माकम् ।

वैष्णवाः— (विस्मयात् ) को वा दोषो नः ?

आखण्डलः— न वो दोषः । परन्तु प्रभुरभुक्त एव एतावतापि ।

वैष्णवाः— कस्मात् ?

काहु,— कार्त्तिकमासत्वात् रन्धनशालायाः प्रदीपानयनान्ते एवात्र मन्दिरे नीतिः भवितुमर्हति । अनन्तरं होमः कार्यः । परन्तु अद्य वृष्टेः प्रावल्यात् प्रभञ्जन प्रकोपाच्च कथं रन्धनगृहात् प्रदीपानयनं जयविजयद्वारि च संस्थापनम् ।

सेवकाः— संकीर्त्तनं प्रहसनाय एव वः । जगन्नाथे भक्तिमत्त्वे सति सामर्थ्ये सति प्रदीपमानीय प्रभोः नीतिनिर्वाहे सहायता करणीया वै । अन्यथा मृदङ्गवादनमङ्गचालनमिव तिलकं प्रसाधनमिव ।

( चैतन्यः जगन्नाथदाशस्य मुखं पश्यति )

आखण्डलः— महात्मनोः उपस्थितौ किं वा असाध्यं स्यात् । सेवकाः ! रन्धनशालां नीत्वा एतयोः पाणौ प्रदीपं प्रदाय पश्यत किं भवत्यनन्तरम् । ( सेवकाः तौ रन्धनशालां नीत्वा हस्ते प्रदीपौ अर्पयन्ति) ।

चैतन्यः— जगन्नाथ, प्रभुरभुक्त एतावता । मा विलम्वेन ।

[ प्रदीपं करे कृत्वा तौ आगच्छतः नृत्येन हरिगानेन प्रबलवर्षास्वपि झञ्झावातेऽपि । प्रदीपौ तथा ज्वलतः ।]

सेवकाः— अद्भुतं माहात्म्यमेतयोः । वारिपाते महावातेऽपि प्रदीपयोः अनिर्वाणम् । (तयोः समीपं गत्वा) अत्र संस्थापयत प्रदीपौ जयविजयद्वारि । (प्रदीपौ संस्थाप्य पुलकेन प्रभुं नमतः) ।

लोकाः— चैतन्यमहाप्रभोः जयोऽस्तु । जगन्नाथदासस्य जयोऽस्तु । श्रीजगन्नाथदेवस्य जयोऽस्तु ।

*

## तृतीयदृश्यम्

[ काशीमिश्रावासः । वंगीयशिष्या रुष्टाः कथयन्ति ]

वंगीयवैष्णवाः— नात्र वास्तव्यं भूयः । जगन्नाथदासस्तु अन्तरङ्गसेवां करोति श्रीगुरोः । चैतन्यचन्द्रस्य अनुरागः मोहः क्रमशः वर्द्धते एव तस्मिन् । स एव प्रष्टव्योऽद्य । (चैतन्यस्य समीपं गच्छन्ति)

चैतन्यः— जगन्नाथ ! मत्पार्श्वे तिष्ठात्र । किमेते वैष्णवाः जिज्ञासमानाः श्रोष्यामः ।

वैष्णवाः— प्रभो ! एतद्देशाग्रजन्मानं अतिवडी इति महत्पदैराह्वयति भवान् । उत्कलीये द्विजपुत्रे प्रीतिर्जायते चेत् कथमस्मासु न्यूनताप्रदर्शनम् ? एतदनुचितं पक्षपातं च वयं मन्यामहे । अतः श्रीक्षेत्रं हित्वा आगन्तव्यं भवता अस्माभिः सह ।



चैतन्यः— (विहस्य) वैष्णवाः ! शृणुत—

 

"अपि कीटपतङ्गाद्याः काष्ठपाषाणवालुकाः
श्रेष्ठाश्चैते यत्र भूमौ मनुष्येस्वपि का कथा ।
एतत् क्षेत्रे स्थिता ये च नराः पशुखगादयः
भक्तिसाधनहीनास्ते प्राप्नुवन्ति परं पदम् ।।

किं पुनः—

"एष विप्रो महाज्ञानी भक्तिरूपं समाश्रितः ।
एनमाश्रित्य तिष्ठामि क्षेत्रं नैव त्यजाम्यहम् ।।"

वैष्णवाः— (विस्मिताः) यथा रोचते भवते । वयं व्रजामः विरजाक्षेत्र-मिदानीमेव । (तेषां प्रस्थानं प्रणामानन्तरं षड्वैष्णवान् हित्वा) ।

—*—

## चतुर्थदृश्यम्

[ षड्वैष्णवाः चैतन्यश्च उपविष्टाः जगन्नाथदासेन सह ]

चैतन्यः— वैष्णवाः प्रियशिष्याः कालात् प्रयाता इतः । तानहं द्रष्टु-कामोऽस्मि । पत्रमपि प्रेरितं मया । उत्तरे तेऽपि मानमिच्छन्ति तत्र मदागमने । अस्त्वेवम्—

तृणादपि सुनीचेन तरोरिव सहिष्णुना ।
अमानिना ज्ञानवेन कीर्त्तनीयः सदा हरिः ।।

विनयो वैष्णवानां लक्ष्णमेव । तत्र गत्वा तान् प्रत्यानेष्यामः । जगन्नाथोऽपि आगच्छतु अस्मत् सार्द्धम् । अभिमानस्य अन्तः भवत्वचिरेण ।

जगन्नाथः— मयि रुष्टास्ते तु। भवता सह मामलोक्य रोषस्तेषां वृद्धिं यास्यत्येव। तथापि भवन्तं अनुगमिष्यामि।

चैतन्यः— निरभिमान जगन्नाथ! नितरां प्रीतोऽहं तव सरलस्वभावात्। रूपसनातननित्यानन्दरघुनाथजीवादयः षड्वैष्णवाः सर्वे सत्वरं प्रस्तुताः भवन्तु। तूर्णं यास्यामः। जगन्नाथ! त्वरया आगन्तव्यं अहमपि प्रस्तुतो भवामि। मिश्रस्तु स्वगृहे तिष्ठतु तावत्।

—*—

## पञ्चमदृश्यम्

[चैतन्यं वीक्ष्य याजपुरे वैष्णवानामानन्दः सपर्या च दिनानि यावत् ]

चैतन्यः—अतिवडी जगन्नाथ! षड्दिनानि गतान्यत्र। भूयो न स्थातव्यं क्षेत्रं प्रति यास्यामः। उद्योगं कुरु।

वैष्णवाः— (मिथः) अतिवडविप्रं न त्यक्ष्यति गुरुपादः। तस्मिन् प्रीतौ वर्द्धितायां कथमस्माकं तत्र प्रत्यागमनम्। (प्रकाशं)

हे देव देव! आगच्छ तीर्थदर्शनकाङ्क्षया।
किं वा तत्रास्ति भगवन् यतस्त्वं भक्तबान्धवः।

चैतन्यः— (तेषां मतिं ज्ञात्वा गम्भीरं) शिष्याः!

"रतिः कृष्णे मतिः कृष्णे गतिर्गङ्गातटे तटे।
जीविते मरणे वापि नीलाचलपतिर्गतिः॥"

वक्रेश्वरः— परन्तु!

राधाप्रेमवशीकृतः स भगवान् कालिन्दिवर्णोज्ज्वलः
गोपालः शिखिपुच्छशोभितशिरः वंशीनिनादेरतः।

मुग्धो यत्र कदम्बपादपशिखामाश्रित्य वृन्दावने
नित्यं तिष्ठति तत्र यातुमधुना त्वत्सङ्गमाशास्महे ॥

चैतन्यः— नैवं भाषणेन । जानामि वः मनोगतम् । परन्तु असौ दाश जगतीपतेः प्रेमभक्तिरतः द्वादशप्रेमभावज्ञश्च । अतः तत्परतन्त्रोऽह तत्सम कमप्यत्र न पश्यामि । यूयं विष्णुपुरं वृन्दावनं वा गच्छेत यस्मै यथा वा रोचते । श्रीगुण्डिचायां वर्षे वर्षे सकृदागत्य पुरी मां साक्षात्कुरुध्वम् ।

जगन्नाथ ! श्रीक्षेत्रं गन्तव्यमेव नः । यतः—

काशीपुर्यवलोकिता मधुपुरी सम्यङ् मया वीक्षिता
गङ्गाद्वारमदर्शि नेत्रपदवीमागादयोध्यापुरी ।
किन्तु श्रीपुरुषोत्तमे मधुरिपोर्मूर्तिं जगन्मोहिनीं
स्मारं स्मारमहर्निशं मम मनः कुत्रापि नो तिष्ठति ।"

वैष्णवाः !

"रहस्यमेतत् क्षेत्रस्य जानाति चतुराननः ।
त्यजन्ति ये क्षेत्रमिदं पशवस्ते न संशयः ॥"

( प्रत्यावर्त्तनम् )

—*—

# तृतीयाङ्कः प्रथमदृश्यम्

[राजसभायां सन्यासी ब्रह्मानन्दः शिष्यशतैः परिवृतः]

ब्रह्मानन्दः— गजपतिकुलचन्द्रमसः प्रतापरुद्रस्य जयोऽस्तु।

प्रतापरुद्रः— नितरां धन्योऽस्मि भवत्साक्षात्कारेण। अतिथिशालायां व्यवस्था विहिता युस्मत्कृते। तत्रैव स्थातव्यम्।

ब्रह्मानन्दः— नचान्नभिक्षां परन्तु वादभिक्षां कामये राजसभायाः पण्डितैः सह ब्रह्मतत्वमीमांसायाम्। पराजितश्चेदत्र विचारे अन्नभिक्षां करिष्यामि। अन्यथा चतुर्दिक्षु विजयस्य सिद्धत्वात् त्रिकोणाकारं छत्रं घृतं मे शिरसि चतुष्कोणाकारं करिष्यामि। शाङ्करसिद्धान्तम् अद्वैतमनादृत्य यूयं विकल्पपन्थिनः सञ्जाता अत्र इति श्रुतं मया। तस्मादेवाहमागतोऽत्र।

प्रतापरुद्रः— सम्प्रति मध्याह्नकालः। आह्निककृत्याय गताः पण्डिताः। श्रीजगन्नाथदेवस्य मध्याह्नभोगान्ते तैरागन्तव्यम्। तस्मादपराह्णं यावत् अतिथिशालायां विश्रामः कार्यः।

ब्रह्मानन्दः—ब्रह्मविचारमकृत्वा नहि मे भोजनं राजद्वारि। निरस्तश्चेन् अभुक्तः गमिष्यामीतः अद्वैतस्य विजयडिण्डिमं निनादयन्।

राजा— महात्मन्! स्तोककालं स्थीयतामत्र सभायाम्। पण्डितान् आवाहयिष्यामि। अपराह्णे विगते अनागतेषु तेषु विजयस्ते स्वीकृतः स्यादस्माभिः।

[ ब्रह्मानन्दस्य अपेक्षा । राज्ञः संवादप्रेरणं राजगुरोः पण्डितानां च समीपम् । अकस्मात् जगन्नाथदाशस्य प्रवेशः । ]

राजा— (सानन्दं) अतिवडि स्वामिन् ! श्रीक्षेत्रं आह्वयतेऽयं सन्यासी ब्रह्मविचारार्थम् । पराजितः आतिथ्यं स्वीकरिष्यति अन्यथा अद्वैतस्य विजयशंखं वादयन् धृतं छत्रं चतुष्कोणाकारं कृत्वा यास्यतीतः । पण्डिता आहूता मया । भयात् अनागमनं चिन्त-यामि । आकाश्मीरदेशात् आगतोऽयं दिग्विजयी स्वामी सर्वान् निर्जित्य । भवांस्तु जगन्नाथदेवेन प्रेरित इव । अत्र विचारेण मनस्तुष्टिं विधेहि अस्य विचारप्रार्थिनः । (साक्षात्करणं स्वामिनः)

अतिवडी— स्वामिपादान् अभिवादयामि । ब्रह्मज्ञानं करामलकवत् भवताम् अद्वैतपन्थिनां शमादिषट्सम्पत्तियुक्तानां परमहंसानां महासिद्धानाम् ।

ब्रह्मानन्दः— (स्व) स्मार्त्त इव कथयति परन्तु वैष्णवचिह्नं धारयति । सुनिर्मलं वपुः अकल्मषं प्रतिभाति । अतीव विनयीस्वभावात् "यत्राकृतिस्तत्र गुणाः वसन्ति" । महासाधकलक्षणान्यपि दृश्यन्ते अस्य शरीरे । वेदान्तशास्त्रज्ञानं परीक्षणीयं केवलम् । (प्रकाशं) कल्याणमस्तु । ब्रह्मणः स्वरूपं प्रमाणं च श्रोतुमिच्छामि त्वन्-मुखात् ।

दाशः— नीलाचलनिवासाय नित्याय परमात्मने ।
बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ॥

अत्र उत्कलदेशे वयं नीलाचलवासिनं जगन्नाथं परमात्मानं नित्यपुरुषं मन्यामहे। स एवात्र गुरुरीशश्च। इह मर्त्यवैकुण्ठे तस्मिन् परमात्मसत्तायाम् अस्माकं विश्वासः। तस्य दृष्ट्यतीत-स्वरूपस्य अचिन्त्यत्वात् इमं दारुविग्रहं विशालाक्षं महाबाहुं एव वयं सेव्यत्वे गृहीत्वा सर्वे तत्सेवायां नियुक्ताः। सेवकस्य सेव्यसत्ताप्रवेशात् सेव्यसेवकयोः भेदाभेदः अचिन्त्य एव जनैः। व्यक्तमेव चिन्त्यम्। तदतिरिक्तम् अचिन्त्यम् अतः असेव्यम् अप्र-योजनं च जीवानाम्। अस्मद्विधानां स्मार्त्तानां शङ्कराचार्य एव आचार्य अत्र। तन्मतमेव सिद्धान्तं नः। परन्तु तदवधारणे न योग्यता साधारणानां सम्प्रति। व्यवहारे साधनावस्थायां च द्वैतत्वं न निराकृतं शङ्करेण। तथा सति कथं तेनाभ्युपदेशः शिष्येभ्यः पञ्चमभूमिकामनागत्य यतः तदुर्द्ध्वे वचसामगतिः।

राजा— साधु साधु।

ब्रह्मानन्दः— अन्तं यावत् अपेक्षस्व राजन्!

अतिवर्डी— ब्रह्मणि वाक्यानां अप्रचरणात् ब्रह्मज्ञानं साधनसिद्धानां क्वचित् महापुरुषाणां स्वरूपावस्थानमेव। व्यवहारे तु न तथा। तस्मादेव शङ्करोक्तिः—"अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह"। आदौ किञ्चित् द्वैतमनवलम्ब्य अन्ते नाद्वैतबोधः। अतः परमा-त्मरूपस्य श्रीजगन्नाथदेवस्य सेवावसरं प्राप्य तस्य कैवल्यसेवनात् परितृप्तानामस्माकम् अद्वैते न रुचिरपि द्वैतसेवायाः साधन-सौकर्यात्। ब्रह्मस्वरूपं तु वेदान्तं तटस्थलक्षणेन वर्णयति। स्वरूपवर्णनरीत्या ब्रह्मत्वं निराकृतं स्यात् ब्रह्मणः। यतः—

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं
अस्थूलमनणुं ह्रस्वमदीर्घं शुद्धमेव च ।
निर्विशेषस्वरूपं तत् अनन्तं ब्रह्मकेवलम् ॥

अत्र स्थूलबुद्धीनां मादृशां न प्रचारः । अस्य विचारेऽप्यप्रवृत्तिः प्रत्यक्ष्यं दारुब्रह्म अञ्जनपर्वताभं जगन्नाथं प्रणम्य परमा एव तृप्तिर्नः । अत्र द्वैताद्वैतशैवशाक्तवैष्णवबौद्धजैनादिसकलमताव-लम्बिनां समन्वयः ।

राजा— एवम् एवम् । आश्चर्यंकरीयं विचाररीतिः ।

अतिवडी— बन्धो ! कुत्र भ्रमसि व्यर्थं भगवन्तं पुरुषोत्तमं विहाय । किं यशसा प्रतिष्ठया वा । उक्तं च भगवता "मास प्राप्यैव कौन्तेय मूढा जन्मनि जन्मनि" इत्यादयः । भवान् शास्त्रेषु सुविद्वान् एव । परन्तु सच्चिदानन्दस्य अपरोक्षानुभवेन विहीनोऽस्ति । महात्मन् ! परंब्रह्म जगन्नाथं शरणं गच्छ । स एव संशयानां प्रहाणं कृत्वा चित्ते शान्तिम् आनेष्यतीत्यत्र अहमेव प्रमाणम् । तथा अन्येऽपि वैष्णवसेवकाः प्रमाणम् ।

ब्रह्मानन्दः— ब्रह्म कथं वाच्यं स्यात् अहो ?

अतिवडी— "यद्येव मुच्यते तर्हि श्रूयतां यतिसत्तम
ब्रह्म चेत् सर्वशब्दानामवाच्यं सर्वथा भवेत् ।
लक्ष्यं भवेत् कथं वा तत् शिरोनास्ति व्यथा कुतः ?"

अतः मानुषीं तनुमाश्रित्य वृथाभिमानं परिहृत्य सीमितजीवन-काले ईश्वरसेवया परमानन्दमनुभव तत् प्रसादात् साधो !

"अयं हि समुद्रस्योत्तरे तीरे आस्ते श्रीपुरुषोत्तमे
पूर्णानन्दमयं ब्रह्म दारुव्याजशरीरभृत् ।
वेदे पुराणे वेदान्ते परमात्मेति गीयते
विश्वस्यास्योपकाराय उड्रे श्रीपुरुषोत्तमे ।
दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र वर्त्तते
कल्पान्ते यस्य नाशो न तत्र नित्यं वसाम्यहम् ॥"

महात्मन् ! आयाहि मया सह द्रष्टुं श्रीपुरुषोत्तमं चतुर्द्धाविग्रहवन्तं यद्दर्शनात् भवद्विधस्य महासाधकस्य जन्म अपि सार्थकं भवेत् । (जगन्नाथदासस्य भावावेशः । पश्यतां प्रतापरुद्रब्रह्मानन्दशिष्यादिराजपुरुषाणां तत्स्वरूपे जगन्नाथदेवस्य समन्वयीमूर्त्तेरावेशः ।)

राजा— अहो ! अद्य सार्थकं नौ जन्म । प्रत्यक्ष्यं पश्यात्र—

"अष्टबाहुर्जगन्नाथ वामे वंशीधनुः शरान् ।
शंखचक्रगदापद्मं बिभ्रत् श्यामोऽभवत्तदा ॥"

ब्रह्मानन्दः— अहो माहात्म्यं गोस्वामिनः । अशेषतः मे प्रणामाः तस्मै। स्वामिन् ! मदो मे गत एव । अद्योपलब्धं मे यत्—

सर्वक्षेत्रेष्विदं क्षेत्रं तीर्थेषु च महोदधिः ।
सर्वक्षेत्रेष्वयं विष्णुः मोक्षदायी सदा हरिः ॥

भूयः प्रणामाः ब्रह्मानन्दस्य ।



## द्वितीयदृश्यम्

(कपिलेश्वरपुरग्रामात् श्रीक्षेत्राय निर्गच्छन्ति केचन विप्राः)

१म विप्रः— भगवानदाशस्य पुत्रोऽसौ जगन्नाथः विंशतिवर्षेऽपि महापण्डितः सञ्जातः। स्वल्पकालाभ्यन्तरेऽपि व्याकरणसाहित्यादीन् समाप्य दर्शनशास्त्रानुशीलनान्ते श्रीमद्भागवते प्रवीणतां गतः।

२यः विप्रः—विद्यावतां भागवते परीक्षा। अतस्तद्व्याख्यानं दुरूहमेव। किशोरोऽपि कथं तदर्थं याथार्थ्येन प्रतिपादयति येन चैतन्यप्रमुखवंशीयसाधकपण्डिता अपि विमुग्धा अभवन्। न केवलं तत् भगवान् गौरचन्द्रोऽपि तस्मै अतिवडी इति उपाधिं दत्तवान्।

१म विप्रः— सर्वं जगन्नाथदेवस्य करुणा एव। दाशः परमो भक्तो वर्त्तते तस्य देवस्य नीलाद्रिसिंहस्य।

३यः विप्रः— वाढम् वाढम्॥ परमा भक्तिरस्य श्रीजगन्नाथदेवे। अन्यथा मङ्गलारात्रिकादारभ्य शृङ्गारवेशं यावत् मन्दिरे एव कथं यापयति। जगन्नाथस्य मध्याह्नधूपान्ते तस्य प्रसादसेवनम्। जलपानमपि न करोति पूर्वरात्रेः प्रसादजलं हित्वा। एवं निष्ठा क्वचित् दृश्यते महासाधकेष्वपि।

१मः विप्रः— परन्तु अस्य तरुणस्य स्वाभाविकी वृत्तिरियम्। जन्मान्तरसंस्कार एवैषः। अन्यथा किशोरीणां संगतिं विहाय अतीव रमणीयदर्शनोऽप्ययं युवकः विवाहमपि अस्वीकृत्य इष्टसेवायु कथं मनो ददाति ?

 

२यः विप्रः— एवं नो चेत् कथमस्मिन् कालेऽपि श्रीजगन्नाथदेवः अष्टभुजेषु आयुधधारी सन् आत्मानं दर्शितवान् तत् शरीरे ब्रह्मानन्द स्वामिनः शास्त्रार्थसमये येन सोऽपि स्तम्भितोऽभवत् ।

३यः विप्रः— श्रीमद्भागवतस्य उत्कलभाषान्तरं कृत्वा तत्प्रतिपाद्यविषयं उत्कलीयेषु सुलभं कारितं तेन । महाराजः प्रतापरुद्रस्तु एतेन तं बहुमानितवान् । राज्ञः एतदेव आदेशः यत् समग्रे उत्कलदेशे भागवतप्रेमिकाः संस्कृतानभिज्ञानां ज्ञानाय ग्रामे ग्रामे जगन्नाथदासेन अनुदितस्य भागवतस्य पाठं कुर्वन्तु ।

१मः विप्रः— तस्मादेवाद्य ग्रामे ग्रामे भागवतमण्डपं प्रतिष्ठितम् । न केवलं पुरुषाः स्त्रियः अन्त्यजा अपि तत्रागत्य भागवतं शृण्वन्ति ।

३यः विप्रः— मिथो विमर्शेण अस्मद् ग्रामे ग्राम्यविवादा अपि निवारिता अत्र । न्यायालयः सञ्जातः तन्मण्डपम् एव । इत्थमनेन दासपुत्रेण देशोऽयं धन्यतां गतः । वयं तद् ग्रामवासिनोऽपि तत् कृते गौरवम् अभिमानं च अनुभवामः ।'

२यः विप्रः— त्वरय ! त्वरय ! मा आलापेन ! एकादश्यां भोगमण्डपभोगान्ते प्रसादस्यापि अन्तः भवेत् ।

## तृतीयदृश्यम्

[ राजदरबारः । काशीरामाभिधानस्य वणिजः प्रवेशः ]

काशीरामः— महाराजस्य पदप्रान्ते भूयसा मे प्रणामः ।

राजा— प्रसन्नोऽहं तुभ्यम् काशीराम ! कथमागतं सहसा ।'

काशीरामः—महाराज ! दोषा मे क्षन्तव्याः । नहि मे महार्घ्यं किञ्चिदुपहारीकरणाय । इदमेव अपूर्वसुरभिश्रीखण्डं संगृहीतं मया । गृह्णातु गजपति कुलचन्द्रमाः दीनस्योपहारम् ।

( चन्दनकाष्ठस्य प्रदानम् )

राजा— देवयोग्योऽयं सर्वथा । प्रतिहारि ! सत्वरं नीत्वा अतिवडीस्वामिने तद् वासगृहे प्रदेहि श्रीजगन्नाथदेवस्य सेवार्थम् ।

( प्रतिहारिणः गमनम् )

प्रतिहारी—अतिवडीस्वामिन् ! राज्ञा प्रदत्तमेतत् गृहाण प्रभोः सेवार्थम् ।

दाशः— गङ्गाजलेन गङ्गापूजा इव जगद्वस्तुना जगन्नाथस्य सपर्या । अपूर्वा सुरभिरस्य चन्दनस्य राज्ञे रोचते अतीव ।

प्रतिहारी— अवश्यं ! अवश्यम् ।

दाशः— सकृत् परीक्षणीयः । (चन्दनकाष्ठघर्षणं भित्तौ विलेपनं च)

प्रतिहारी— (क्रुद्धः) सर्वं राज्ञे निवेदयिष्यामि । राज्ञः प्रसादलाभात् महानेव गर्वस्ते । कारागाराय प्रस्तुतो भव !

(दाशस्य पूर्ववत् लेपनं चन्दनस्य । प्रतिहारिणं प्रत्यावर्त्तनं राजदरवारम्)

राजा— प्रतिहारिन् ! चन्दनं प्रदत्तं किमु अतिवडीस्वामिने रात्रौ जगन्नाथसेवार्थम् ।

प्रतिहारी— अभये प्रदत्ते कथयिष्यामि ।

राजा— ब्रूहि, अभीतोऽसि ।

प्रतिहारी— श्रीखण्डस्य प्राप्तिमात्रेण स्वामी शिलायां घर्षणं कृत्वा स्वगृहभित्तौ प्रलिप्तवान् तत्चन्दनम् । व्यर्थमानीतं वणिजा । व्यर्थं दत्तं तस्मै राज्ञा ।

राजा— (क्रुद्धः) एवं चेत् दण्डनीयः सः। रक्षिभिरानेतव्योऽसौ सत्वरं विचारः भविष्यति। (रक्षिभिः सह दाशस्यागमनम्)

दाशः— कथमाहूतोऽहं राजन् एवं त्वरया ?

राजा— चन्दनम् अर्पितं किमु जगन्नाथसेवार्थम् ?

दाशः— (विहस्य) एव। एव। तत्क्षणादेव कृतं तथा। भवदाज्ञा कथं न पालनीया ?

प्रतिहारी— मिथ्या वदत्ययं महात्मापि। स्ववासगृहस्य भित्तौ चन्दन-लेपनं कृत्वा जगन्नाथाय अर्पितमिति कथयति। महाराज ! अयं मिथ्यावादिनामग्रगण्य एव। प्रत्यक्षीकृतं वस्तु व्यत्ययेन कथयति।

दाशः— शृंङ्गारिणम् आहूय ज्ञायताम्। स्वयं वा विलोकय घृष्टश्रीखण्ड चन्दनं प्रभोः विग्रहे।

राजा— प्रधानशृंङ्गारिणमत्रानय सत्वरम्।

( रक्षिणः गमनम्। तेन सह शृंङ्गारिणः प्रवेशः )

शृंङ्गारी— किमर्थमाहूतोऽहं महाराज ?

राजा— चन्दनं दत्तं किमु अनेन स्वामिना ?

शृंङ्गारी— बाढं बाढम्। दाशेन न प्रदत्तम्। परन्तु अकस्मात् प्रभोः श्रीविग्रहे चन्दनं लेपितम्। अपूर्वा एव सुरभिः तस्य।

दाशः— (ईषत् हसति।)

राजा— भयात् प्रणमति स्वामिनम्।

प्रतिहारी— नूनं यादुकरोऽयं महात्मा।



—*—

# चतुर्थदृश्यम्

( प्रतापरुद्रस्य दरबारः )

लोकाः— महाराज ! पश्यन्तु भवन्तः तथाकथित वैष्णवानाम् अत्याचारम् । राजपुरुषा अपि राज्यशासने शिथिलतां प्रदर्शयन्ति । अतिवडिउपाधिमत्तोऽसौ जगन्नाथदासः दिने दिने स्वेच्छाचारे वर्त्तते ।

राजगुरुः— स तु स्मार्त्तः मूलेन । वाह्यत एव वैष्णवप्रसाधनं । आत्मानं राधां मन्यते । अतः स्त्रीभावं वेशं च प्रदर्शयति मात्रम् । तत्त्वतः शाङ्करसिद्धान्तानुसारेण जीवत्यसौ । शुकदेव एव तस्यादर्श इत्यहं जाने ।

लोकाः— परन्तु स्त्रीभावप्रदर्शनेन नारीजनोचितवेशधारणेन नास्माकं काचित् हानिः सम्भवति । पुंजन्मनि स्त्रीभावप्रदर्शनं विगर्हितं आत्मप्रतारणा नहि किम् ? परन्तु स्त्रीभावं प्रदर्श्य बहुस्त्रिभिः समं विहारः का नाम साधना वा ?

राजगुरुः— घटना स्पटीकरणीया ।

लोकाः—प्रतिनक्तं दिव्यनारीव रमणीयं नारीत्रयं तस्य गृहमागच्छन्ति सेवार्थं परन्तु कथमपि पलायितम् ।

राजगुरुः—नहि तथा भवितुमर्हति । एकदा मया पृष्टः स एवमुक्तवान् । राजगुरो ! उत्कलप्रान्ते विद्याया स्तथा प्रचारो न दृश्यते श्रीक्षेत्रं हित्वा । श्रीक्षेत्रेऽपि संस्कृतस्य प्रतिष्ठा राज्ञः पृष्ठपोषकत्वात् ! ब्राह्मणानां प्रायशः प्रवेशः संस्कृतभाषायाम् । परन्तु समाजे न

 

केवलं ब्राह्मणाः वर्त्तन्ते। ब्राह्मणेष्वपि अनेके मूर्खाः सन्ति। पण्डितानां गृहेष्वपि स्त्रियः न तथा वैदुष्यभूषिताः। समग्रदेशे पुरुषाणां अध्ययनपराङ्मुखत्वे सति का कथा नारीणाम्। परन्तु नारीनराभ्यां गठितोऽयं समाजः। अधुना स्त्रियः सर्वजातिषु भोग्यवस्तुरूपेणैव व्यवहृताः। तास्तु निर्यातिताः अत्याचारिताः प्रतारिताः सर्वैः केवलं तासां अज्ञताहेतोः। मनुष्यजन्मनः स्वाधिकारं सार्थकतामपि न ते जानन्ति। श्रीकृष्णाख्येन भगवता तास्तु उत्साहिताः यथा—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥

नारदोऽपि कयाधूमुपदिश्य गर्भस्थ प्रह्लादं हरिभक्त्या शिक्षितवान्। स्त्रियः मूढाः अनाचारिण्यश्चेन् कथं समाजस्य उन्नतिः एकाङ्गस्य पक्षाघातान्। अज्ञापितेषु धर्मतत्वेषु स्त्रीषु सनातनोऽयं धर्मः हानिं याति क्रमशः। स्त्रियोऽपि भगवद्भक्तिं कर्त्तुमर्हन्ति भक्तिमती मीरेव। तासामेव प्रोत्साहनाय ममापि एवं वेशधारणं राधाभावान्। स्वाचारैरपि ललनाः गृहे स्थित्वापि ईश्वरत्वं प्राप्तुं शक्नुवन्ति इत्येत्रादर्शः स्थापितः श्रीराधया जगत्सु आत्मानं कृष्णाय समर्प्य निमित्तरूपेण संसारव्यवहारं कृत्वा। ता अपि आत्महितेन सह देशहितं कर्त्तुमर्हन्ति। कृष्णाभावेऽपि राधा कृष्णप्रिया आसीदेव। स्त्रीत्वेऽपि जन्मसिद्धिः सम्भवेत् इत्येव शिक्षा राधया उपस्थापिता समाजे। तस्मान् स्त्रीशिक्षार्थ-

मेव मे राधाभावप्रकटनम्। अस्मात् ममादर्शात् सर्वैः स्त्रीणामादरं कृत्वा तासां शिक्षादीक्षाद्लादभ्रमणादीनां व्यवस्था करणीया। सम्भोगकालस्वभावं पित्रोः शिशवः गृह्णन्ति। मातरि दुःखितायामशिक्षितायां कथं सुस्थपुरुषाणामुत्पत्तिः। तदर्थमेव भागवतस्य मातृभाषानुवादः कृतो मया। तास्तु संवुद्धाः भवेयुः। तदर्थं मे विपरीतचेष्टा तासां विश्वासोत्पादनाय मयि स्नेहात्।

लोकाः— परन्तु कास्ताः कन्यकाः या निशार्द्धे केवलमागच्छन्ति।

राजगुरुः— तर्हि बद्ध्वा नयत राज्ञः पुरतः विचारार्थं निशायामपि।

लोकाः— अद्यैव करिष्यामः।

राजगुरुः— अस्त्वेवम्।

—*—

## पञ्चमदृश्यम्

( दरबारः। लोकाः समागताः )

राजगुरुः— का वार्त्ता दाशस्य। नार्यः गृहीताः किमु विचारार्थम्?

लोकाः— नहि तथा संघटितम्।

राजगुरुः— कथं न?

लोकाः— आश्रमोपान्ते प्रच्छन्नं जागरुकाः वयं आगतेषु युवतिषु गृहाभ्यन्तरमपि बलाद् प्रविष्टवन्तः।

राजगुरुः— ततः।

लोकाः— परन्तु प्रविष्टेषु अस्मासु नारीमूर्त्तयः शून्ये विलीयमानाः सञ्जाताः।

राजगुरुः— जनाः ! लोकोत्तराणां चरितं नैवं दूषणीयम् । दिव्यनार्यः समागताः दाशस्य सेवार्थम् । युस्मान् दृष्ट्वा पलायितास्ताः । दाशं क्षमापयध्वम् । राजानमुक्त्वा युस्मान् सर्वानहं क्षमापयिष्यामि ।

—*—

## षष्ठदृश्यम्

[ सातलहरीमठः निर्जनसमुद्रतीरे । आत्मविभोरः दाशः उपविष्टः पण्डितभक्तानां प्रवेशः । ]

दाशः— आसनं गृह्णन्तु भवन्तः । यूयं संस्कृतज्ञा अद्य प्रभृति मातृभाषायाः चर्चां कुरुध्वमपि । स्त्रीशूद्राः ह्यातुमयोग्याः । धर्मशास्त्रस्य लेखनं धर्मस्य चर्चा मातृभाषया न भवेत् चेत् कथं विकाशः समूहस्य ।

पण्डिताः— तर्हि भवन्तः मार्गान् दर्शयितुमर्हन्त्येव ।

दाशः— कृतं किञ्चित् । भूयोऽप्यवश्यं करिष्यामि मुक्तिमण्डपस्थानां ब्राह्मणपण्डितानां विरोधेऽपि । तत्कर्मणि सर्वेषामुद्योगे तत्परतायां च देशवासिनां मङ्गलं स्यात् । एतदर्थमेव मम गुरुपादेन श्रीबलरामदाशेन रामायणस्य भाषानुलिखनं कृतम् । अन्यैरपि यशोवन्तानन्ताच्यूतादिमहापुरुषैः उत्कलभाषया एव स्व स्व वक्तव्यानि प्रचारितानि लिखितानि च । संस्कृतकाव्यं कृत्वा वेदान्तज्ञानप्रदर्शनेन कूटतर्केण वा मुक्तिः न भवति संसारपाशात् भगवतः प्रीतिश्च । स तु भावग्राही न तु भाषाग्राही । गजस्य का

भाषासीत् हरिस्तवने ? परन्तु तद्दुःखम् अन्तरस्थत्वात् हरिः ज्ञात्वा प्रतीकारं कृतवान् । एव हरिणी अपि । उच्यते च—

"व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
कुब्जायाः किमु नाम रूपमधिकं किं तत् सुदाम्नोः धनम् ।
वंशः को विदुरस्य यादवपते उग्रस्य किं पौरुषं
भक्त्या तुष्यति केवलं न च गुणैः भक्तिप्रियो माधवः ।।

पण्डिताः— अवश्यम् अवश्यम् ।

दाशः— नाहं भागवतपाठ पुनः करिष्यामि श्रीमन्दिरे । अत्र ध्यानं रोचते मह्यम् । नीलचक्रपताकापि दृश्यते स्थानादस्मात् । समुद्रध्वनिरेव एकोऽत्र प्रत्यवायः । तदर्थं जगन्नाथं प्रार्थितवानहम् । समुद्रोऽपि किञ्चित् दूरे यातः । मन्दिरं न यास्यामि इति न परन्तु धूपवेलायामेव । अत्रैव मनसि ते इष्टदेवाः प्रत्यक्षीभूताः मे। जनसङ्गमे नहि मे मतिर्भूयः ।

भक्ताः— चैतन्यसंप्रदाय एवास्मत् संप्रदायः ।

दाशः— अतिवडीसंप्रदाये किञ्चित् भिन्नत्वं वर्त्तते तस्मात् । तत्र ध्येयः श्रीकृष्णचन्द्रः । अत्र तु नीलाद्रिचन्द्रः । वस्तुतः न भेदेऽपि आचारे व्यवहारे च पार्थक्यं भवति । उत्कलीयानां भक्तिः किञ्चित् ज्ञानमिश्रा परन्तु वङ्गीयानां प्रेमप्रधाना । परकीयाप्रीतिरत्र न ग्राह्या । यूयं षोडशपुरुषाः मया प्राक् दीक्षिताः मत्पुरतः आगच्छन्तु ।

शिष्याः— (पुरो गत्वा प्रणमन्ति विस्मयेन ।)

दाशः— पुत्रकाः। स्वदेशचिन्ता न परिहर्त्तव्या। आदौ देशः। देशे स्थित्वा एव जनाः धर्माय यतन्ते। वनवासिनो मुनयोऽपि जीवन्ति भिक्षया ग्रामादेव। अस्मद्देशस्य इष्टः श्रीजगन्नाथदेवोऽपि भूमेः प्रसूतेन उद्भिज्जातकाष्ठेन निर्मितः बहिरङ्गतया। अतः आदौ स्वदेशः। पश्चात् स्वमुक्तिचिन्ता वः। सर्वेऽपि जीवन्मुक्ताः अन्ते लोकसंग्रहं कृतवन्त एव। सर्वेऽपि संप्रदायकर्त्तारः स्वदेशहितचिन्तकाः। ब्रह्मनिष्ठशङ्कराचार्योऽपि देशस्य मङ्गलाय आकुमारी हिमाचलं सनातनधर्मस्य वैजयन्तीं उड्डीनां कृतवान् सर्वभेदान् अन्तर्विलीय। यूयं गच्छत स्वस्वगृहम्। एकाकी स्थातुमिच्छामि। स्वयं जगन्नाथः प्रेरयिष्यति मदर्थं तत्प्रसादम्।

—*—

## सप्तमदृश्यम्

[ सातलहरीभजनकुटीरे जगन्नाथदाशः ]

भक्ताः— तीर्थाटने वयं यतमानाः।

दाशः— नहि मे वासना तथा। भगवान् एव तीर्थपादः। तत्पादपथः गङ्गाप्रवाहः घर्मश्च मणिकर्णिका इति कथ्यते। किं स्वमाहात्म्यप्रदर्शनेन अन्यत्र गत्वा। सर्वे सन्तः अत्रैवागतवन्तः। अधुनाप्यागच्छन्ति। जगन्नाथं हित्वा क्षणमपि नाहमिच्छामि गन्तुमन्यत्र। चैतन्यचन्द्रस्यापि अत्रैव चिरायावस्थानं तीर्थसकलं गत्वापि। (मौन)

भक्ताः— (परस्परमुखं पश्यन्ति।)

 

दाशः — राधाकृष्णतत्त्वोपदेशः मया पूर्वं भूयसा कृतः। रामनाम-भजनं जगन्नाथदर्शनं च कृत्वा यथासम्भवं देशस्य हिताय यतध्वं परपीडासक्त्वा। किं भूयोभिः विदग्धवचनैः इति।

भक्ताः— (भावान्तरं परिलक्ष्य स्तम्भिताः।)

दाशः— किमालोचनैः भूयसा। इष्टं भजस्व। परहिताय यतस्व। स्वयं कृत्वा अपरैः स्वस्य स्त्रीपुत्रादिरपि कारयेत्। हरिदासः मत्पादुका पीठस्याधिकारी तिष्ठतु इतः परं। वासेलिसाहित्यपीठोऽपि तदधिकारे तिष्ठतु। अन्यैः स्वस्व गृहे ग्रामे पतितपावनजगन्नाथस्य साम्यमैत्रीपूर्णा उदारवार्त्ता प्रचारितव्या पालनिया च। ध्याने मे मतिः प्रयाति। न भूय आलापाः। सर्वेषां मङ्गलं वः। संशये जाते अन्तर्यामी हरिरेव च्छेतास्य।

हरिदासः— (व्याकुलतया) वयं विभीताः एव सिद्धान्तेन भवताम्। भवतामभावे को वा सूत्रधारत्वं करिष्यत्यस्य मातृभाषाप्रचाररूप महाविप्लवस्य।

दाशः— यूयं सर्वे पण्डिताः पारङ्गमाः भक्तिनिष्ठाश्च। आपदः स्खलनं च न स्युः वः। अद्य माघस्य शुक्लासप्तमी। सहस्रशः जनाः चन्द्र-भागायां सूर्योदयदर्शनादनन्तरं जगन्नाथदर्शनाय आगमिष्यन्ति। मालादिकमानयात्र, तिलकं करिष्यामि। यूयं पूर्वं गच्छत मन्दिरं अहमनुयामि एव।

(शिष्याणां गमनं शङ्कमाना अपि आपदः। दूरं गच्छत्सु तेषु।)

दाशः— (पद्मासने उपविश्य ध्यानं कृत्वा)

ॐ नीलाचलनिवासाय नित्याय परमात्मने
बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ॥

ॐ हरे राम हरे राम, राम राम हरे हरे ।

—*—

## अष्टमदृश्यम्

[ श्रीमन्दिरपार्श्वे मार्गे ]

हरिदासः— तत्र पश्यामि गुरुपादं पुरतः ।

आखण्डलः— परन्तु अहं मन्दिरे गरुडस्तम्भसन्निधौ दृष्टवानेव ।

काहुखुण्टिआ— (क्रन्दन्नागत्य) किं प्रलापैः वः । विद्युत्गत्या स विद्युत् कान्तमहात्मा जगन्नाथस्य सिंहासनमारुह्य अन्तर्हितो बभूव निमेषेन । तत् प्रत्यक्षीकृत्य भयदुःखेन अत्रागतः । भजनकुटीरमादौ गच्छामः । ( सर्वे गच्छन्ति । सुनिश्चलां गुरुमूर्त्तिं दृष्ट्वा विलपन्ति ।)

हरिदासः— समुद्रे स्नात्वा तर्पयेयुः । (राज्ञः आगमनं तत्र)

राजा— सचल जगन्नाथः तिरोहित एवाद्य उत्कलदेशात् । समाधिः स्यादेव तस्यात्र । पूर्वं राज्ञाः निलयं यत्र गोस्वामिना चिराय स्थितं तदेव ओडिआमठ इत्याख्यां धारयतु । अयं समाधिपीठोऽपि

सांतलहरी मठाख्यां वहन् ओडिआमठस्य अधिकारिणः तत्त्वावधाने तिष्ठतु। (इत्युक्त्वा विलपति)

जनाः— जयतु जयतु अतिवडीमहात्मा। जयतु जयतु जगन्नाथदासः जयतु जयतु श्रीजगन्नाथः।

(सर्वे विलपन्ति)

[ यवनिकापातः ]

श्री श्रीगुरवेऽर्पितमस्तु।

—*—